सम्प्रत्ययमस्त्वनिमिषा इह मत्करस्थः
क्षुद्र क यास्यसि कुतापस तिष्ठ तिष्ठ[1] ॥ १६ ॥

राक्षसः—महाराज अलमतिसाहसेन ।

सीता[3]—अणिट्ठाणि अणरुहाणि अणिमित्ताणि इदाणिं करअंतस्स रावणस्स अइरेण मरणं भविस्सदि । (क)

रावणः—अस्याः कारणेन बहवो भ्रातरः सुता[4]ः सुहृदश्च मे निहताः। तस्मादमित्रविषयमस्या हृदयं भित्त्वा कृष्टान्त्रमालालंकृतः खड्गाशनिपातेन समनुजयुगलं सकलवानरकुलं ध्वंसयामि ।

राक्षसः—प्रसीदतु प्रसीदतु महाराज[6]ः । अलमलमिदानीमरिबलावलेपमन्तरेणानवरतवृथाप्रयासेन । अवश्यं च स्त्रीवधो न कर्तव्यः ।

रावणः—तेन हि[7] स्यन्दनमानय ।

राक्षसः—यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । इदं स्यन्दनम् ।

(क) अनिष्टान्यनर्हाण्यनिमित्तानीदानीं कुर्वतो रावणस्याचिरेण मरणं भविष्यति ।

त्वां भवन्तु रक्षन्तु । क्षुद्र तुच्छ । कुत्सितस्तापसः कुतापसः । तिष्ठ तिष्ठ । क गच्छसि ॥ १६ ॥

अस्या इत्यादि । अस्याः सीतायाः । बहवो भ्रातरः कुम्भकर्णादयः, सुता इन्द्रजिदादयः, सुहृदश्च प्रहस्तादयः, निहता मरणं प्राप्ताः । अमित्रविषयं प्रीतेरविषयं अमित्रस्य विषयं यत् तत् अमित्रविषयम् । अमित्रं विषयः यस्य तदिति वा । अस्या हृदयं भित्त्वा विदारयित्वा हृदयात् कृष्टया आन्त्रमालया आन्त्रस्रजा अलंकृतवक्षोभागः । खड्ग एवाशनिस्तस्य क्षेपेण समनुजयुगलं रामलक्ष्मणसहितं सर्ववानरसैन्यं ध्वंसयामि ।

प्रसीदत्वित्यादि । अरिबलस्य शत्रुबलस्य यः अवलेपः गर्वः तमन्तरेण तं प्रतीत्यर्थः । अलमलं वधोद्यमेन इति शेषः ।

तेन हीत्यादि ।

१ 'युधि' क. २ 'ष्ठ । सीता—'क. ३ 'ता—अण' क. ४ 'तश्च निहताश्च । त' क. ५ 'लं वा' क. ६ 'जः । अलं, श्री' क. ख. ग. ङ. च. ७ 'हि क्षिप्रमानीयतां स्यन्दनः' क. ख.

**रावणः**—( रथमारुह्य )

समावृतं सुरैरद्य सीते द्रक्ष्यसि राघवम् ।
मम चापच्युतैस्तीव्रैर्बाणैराक्रान्तचेतसम् ॥ १७ ॥

( निष्क्रान्तः सपरिवारो रावणः )

**सीता**—इस्सरा अत्तणो कुलसरिसेण चारित्तेण जदि अहं अणुसरामि अअउत्तं, अअउत्तस्स विजओ होदु । (क)

( निष्क्रान्तौ )

पञ्चमोऽङ्कः ।

---

(क) ईश्वराः आत्मनः कुलसदृशेन चारित्रेण यद्यहमनुसराम्यार्यपुत्रं, आर्यपुत्रस्य विजयो भवतु ।

---

समावृतमिति । मम चापाद् धनुषः च्युतैः विगलितैः विसृष्टैरित्यर्थः । तीक्ष्णैर्निशितैः बाणैः आक्रान्तचेतसं गतचैतन्यं सुरैः रक्षोभिः आवृतं राघवं हे सीते त्वमद्य साम्प्रतमेव द्रक्ष्यसि । यथा त्वं द्रक्ष्यसि तथाहं करोमीति भावः ॥१७॥

पञ्चमेऽङ्के, ययोः कयोश्चित् शिरःप्रतिकृतिं दर्शयित्वा रामलक्ष्मणयोर्मरणवृत्तान्तनिवेदनेन रावणकृतं सीताप्रलोभनं, युद्धे इन्द्रजिन्मरणेन रावणस्य सन्तापः, सन्तप्तहृदयस्यापि पुनरपि समाश्वस्तहृदयस्य तस्य श्रीरामं विनिपातयितुं प्रवृत्तिश्च,

इति पञ्चमोऽङ्कः ॥

---

१ 'स्तीव्रैर्बा' क. २ 'इति निष्क्रान्ताः सर्वे' क.

# अथ षष्ठोऽङ्कः ।

( ततः प्रविशन्ति विद्याधराश्चयः )

सर्वे—एते स्म भो एते स्मः ।

प्रथमः—इक्ष्वाकुवंशविपुलोज्ज्वलदीप्तकेतोः

द्वितीयः—रामस्य रावणवधाय कृतोद्यमस्य ।

तृतीयः—संग्रामदर्शनकुतूहलबद्धचित्ताः

सर्वे—प्राप्ता वयं हिमवतः शिखरात्प्रतूर्णम् ॥ १ ॥

प्रथमः—चित्ररथ एते देवदेवर्षिसिद्धविद्याधरावयो निरन्तरं नभः कृत्वा स्थिताः । तस्माद् वयमप्येतेषामेतान् गणान् परिहरन्तः स्वैरमेकान्ते स्थित्वा रामरावणयोर्युद्धविशेषं पश्यामः ।

उभौ—बाढम् । ( तथा कृत्वा )

प्रथमः—अहो प्रतिभयदर्शनीया खल्वियं युद्धभूमिः[4] ।

इह हि,

रजनिचरशरीरनीरकीर्णा कपिवरवीचियुता वरासिनक्रा ।

उदधिरिव विभाति युद्धभूमी रघुवरचन्द्रशरांशुवृद्धवेगा ॥ २ ॥

---

विद्याधरा, गुह्यकाः ।

एते स्म भो इत्यादि ।

अथ समरभूमिप्रविष्टा विद्याधराः स्वागमनहेतुं प्रदर्शयन्त आहुः—इक्ष्वाकुवंशेति । इक्ष्वाकुः कश्चित्प्रसिद्धो राजा तद्वंशे विपुलो विस्तीर्ण उज्ज्वलो दीप्तश्च केतुर्ध्वजचिह्नं यस्य । अत्र दीप्तिकेतुरिति रम्यः पाठः । कुतूहलं कौतुकम् । वयं हिमवतो हिमालयस्य शिखरात्प्रतूर्णं यथा स्यात्तथा प्राप्ताः । एतेन रामरावणसंग्रामदर्शनस्त्रौत्सुक्यातिशयस्तन्मनसि प्रतीयते ॥ १ ॥

चित्ररथ एते इत्यादि । निरन्तरं निश्छिद्रं निरवकाशं कृत्वेत्यर्थः ।

रजनिचरेति । रजनिचराणां राक्षसाणां यानि शरीराणि तान्येव नीरं जलं तेन कीर्णा व्याप्ता । कपिवराः श्रेष्ठा वानरा एव वीचयस्तरङ्गाणि तैर्युता । वराः श्रेष्ठा असितीक्ष्णाश्चासय एव नक्रा जलीयहिंस्रजीवविशेषाः यस्यां सा । यथा नक्रा घातकास्तथा असयश्चेत्युभयोः साम्यम् । रघुवरचन्द्रशरांशुभिर्वृद्धवेगा । इति युद्धभूमेरुदधिना साम्येन सेनातिशयः स्तूयते । समुद्रोऽपि चन्द्रकिरणप्रवृद्धवेगो भवतीति सर्वत्र पूर्णोपमा ज्ञेया ॥ २ ॥

---

१ 'सिके', क. २ 'मध्येन', क. ३ 'ताः । वयमप्येषाम्', क. ४ 'मिः, र', क.

**द्वितीयः**—एवमेतत् ।

एते पादपशैलभग्नशिरसो मुष्टिप्रहारैर्हताः
कण्ठैर्वानरयूथपैरतिबलैरुत्फुल्लकर्णीकृताः ।
कण्ठग्राहविवृत्ततुङ्गनयनैर्दष्टोष्ठतीव्रैर्मुखैः
शैला वज्रहता इवाशु समरे रक्षोगणाः पातिताः ॥ ३ ॥

**तृतीयः**—एते चापि द्रष्टव्या भवद्भ्यां,

निशितविमलखड्गाः क्रोधविष्फारिताक्षा
विमलविकृतदंष्ट्रा नीलजीमूतकल्पाः ।
हरिगणपतिसैन्यं हन्तुकामाः समन्ताद्
रभसविवृतवक्त्रा राक्षसाः सम्पतन्ति ॥ ४ ॥

**प्रथमः**—अहो नु खलु,

बाणाः पात्यन्ते राक्षसैर्वानरेषु

**द्वितीयः**—शैलाः क्षिप्यन्ते वानरैर्नैर्ऋतेषु ।

**तृतीयः**—मुष्टिप्रक्षेपैर्जानुसंघट्टनैश्च

**सर्वे**—भीमश्चित्रं भोः सम्प्रमर्दः प्रवृत्तः ॥ ५ ॥

**प्रथमः**—रावणमपि पश्यतां भवन्तौ,

कनकरचितदण्डां शक्तिमुज्ज्वालयन्तं

---

अथ च । एते पादपशैल इत्यादि—पादपा वृक्षाः शैला पर्वताश्च तै
र्विदीर्णमस्तकाः । कंठग्राहेण गलग्रहणेन विवृत्तानि तुङ्गानि च नयनानि येषां तैः ।
प्रसह्य गलगृहीतश्च पुरुषः प्राणरोधाद्विवृत्तोत्तुङ्गनयनश्च भवतीति दृश्यते । रोषकार-
णाद्दंतोत्पुच्छकर्णीकृताः । मुखैरित्युपलक्षणे तृतीया ॥ ३ ॥

निशितविमलखड्ग इत्यादि । निशितास्तीक्ष्णा विमला मलरहिता खड्गाः कृपा-
णानि येषां ते । क्रोधेन हेतुना विस्फारिताक्षा विकसितलोचनाः । स्फार विकसने ।
नीलजीमूतकल्पा इतीषदर्थे कल्पप् प्रत्ययः । हरीणां वानराणां गणः समूहस्तस्य-
पतिः सुग्रीवस्तस्य सैन्यम्, वानरजातीयानां मानुषाणां सैन्यमिति । रभसविवृत-
वक्त्राः वेगकारणेन विस्फारिताननाः ॥ ४ ॥

बाणा इति—राक्षसा वानरेषु बाणान् पातयन्ति । वानराः नैर्ऋतेषु शैलान्
क्षिपन्ति । नैर्ऋता राक्षसाः । संप्रमर्द अन्योन्यद्वंद्वसंयोगरूपः संघर्षः । भीमः
भयानकश्चित्रः आश्चर्यप्रदः ॥ ५ ॥

---

१ 'यूथपै'. क. २ 'रुत्फुल्लक'. क. ३ 'क्षोवराः पा'. क. ख. ग.
४ 'विकृत'. क. ख. ग. च. ५ 'सर्वे—भ' इत्यारभ्य 'प्रवृत्तः' इत्यन्तम् . क.

विमलविकृतवंष्ट्रं स्यन्दनं वाहयन्तम् ।
उदयशिखरिमध्ये पूर्णबिम्बं शशाङ्कं
ग्रहमिव भगणेशं राममालोक्य रुष्टम् ॥ ६ ॥

**द्वितीयः**—राममपि पश्येतां भवन्तौ,
सव्येन चापमवलम्ब्य करेण वीर-
मन्येन सायकवरं परिवर्तयन्तम् ।
भूमौ स्थितं रथगतं रिपुमीक्षमाणं
क्रौञ्चं यथा गिरिवरं युधि कार्तिकेयः ॥ ७ ॥

**तृतीयः**—रावणेन विमुक्तेयं शक्तिः कालान्तकोपमा ।
रामेण स्मयमानेन द्विधा छिन्ना धनुष्मता ॥ ८ ॥

पश्येतामिति विचारणीयः प्रयोगः । दृश्येताम् इति स्यात् । कनकरचितदण्ड-मित्यादि—कनकेन सुवर्णेन रचितो दण्डः यस्यास्तां तथाभूतां शक्तिमस्त्रविशेषमु-ल्लालयन्तं चालयन्तम् । रोषावृतश्च पुरुषः शत्रुसैन्ये प्रभावं दर्शयितुं स्वान्यस्त्राण्यु-ल्लालयति । शिखराणयस्य सन्तीति शिखरी पर्वतः, उदयशिखरीउदलाचलस्तन्मध्ये पूर्णबिम्बं पूर्णमण्डलम् शशाङ्कं चन्द्रमिव । शशस्याङ्कश्चिह्नं यस्मिंस्तम् । भगणेश-मिति । भगणेशं ग्रहं सूर्यमिव । भगणः भागानां नक्षत्राणां गणः समूहः नक्षत्रसमूहः । शीघ्रगामिनां ग्रहाणामल्पेन कालेन मन्दगामिनां ग्रहाणां महता कालेन पूर्वगत्या यातानां पश्चिमगत्या परिवर्तनेना
षष्टि विकलाभिः कला, षष्टि कलाभिर्भागः, त्रिंशभागै :
यथा—

शीघ्रगस्तान्यथाल्पेन कालेन महताल्पगः । .
तेषान्तु परिवर्तेन पौष्णान्ते भगणः स्मृतः ॥

राशिबोधे तु भगणस्येशो भगणेशो राशिपतिः सूर्यः ?। अथवा चन्द्रस्यैव विशेषणं स्यादिति विचार्यम् । राममालोक्य रुष्टमिति रावणे योज्यम् ॥ ६ ॥

सव्येनेति—भूमौ स्थितं वीरं राममपि भवन्तौ पश्येतां दृश्येताम् ? किं भूत-मिति । सव्येन हस्तेन चापं धनुर्गृहीत्वान्येनापरेण दक्षिणेतरेण च सायकवरं श्रेष्ठं सायकं परिवर्तयन्तं चालयन्तम् । अथ च कार्तिकेया कुमारा युधि गिरिवरं पर्वत-श्रेष्ठं क्रौञ्चं यथा । यथा कार्तिकेयः युधि क्रौञ्चमपश्यत्तथा रामोऽपि रिपुमपश्यत् । कार्तिकेयस्योपमानत्वेन क्रौञ्च वध इव रावणवधोऽपि अवश्यम्भावी ध्वन्यते ॥ ७ ॥

रावणेनेत्यादि—रावणेन पौलस्त्येन विमुक्ता कालान्तकोपमेयं शक्तिः स्मयमा-

१ 'विकृत'. क. 'विवृतवदनदं'. ख.　२ 'यम्' ख.　३ 'यः—इहह, रा' ख.
४ 'जय'क.

**प्रथमः**—शक्तिं निपातितां दृष्ट्वा क्रोधविस्फारितेक्षणः।
रामं प्रत्येवं च (ण ? ष) मभिवर्षति रावणः ॥ ९ ॥

**द्वितीयः**—अहो रामस्य शोभा।

एता रावणजीमूताद् बाणधारा विनिस्सृताः।
विभान्ति राममासाद्य वारिधारा वृषं यथा ॥ १० ॥

**तृतीयः**—एष एषः,

कनकरचितचापं तीक्ष्णमुग्रस्य शीघ्रं
रणशिरसि सुघोरं बाणजालं विधून्वन्।
रथगतमभियान्तं रावणं याति पद्भ्यां
गजपतिमिव मत्तं तीक्ष्णदंष्ट्रो मृगेन्द्रः ॥ ११ ॥

**सर्वे**—अये ज्वलित इव प्रभयायं देशः। किन्नु खल्विदम्।

**प्रथमः**—आयुद्धसामान्यजनितशंकेन महेन्द्रेण प्रेषितो मातलिवाहितो रथः।

**द्वितीयः**—उपस्थितं मातलिं दृष्ट्वा तस्य वचनाद् रथमारूढवान् रामः।

**तृतीयः**—एष हि,

सुरवरजयदर्पदेशिकेऽस्मिन्

---

नेन ईषद्धासयुक्तेन धनुष्मता धानुष्केन रामेण द्विधा छिन्ना। स्मयमानेनेति विशेषणं शक्तेश्छेदने प्रयासराहित्यं सूचयति ॥ ८ ॥

एता रावणेत्यादि—जीवनस्य जलस्य मूतः पुटबन्धो जीमूतः रावण एव जीमूतो रावणजीमूतस्तस्माद्विनिःसृता। एता बाणधाराः रामं दाशरथिमासाद्य वृषं वृषभमासाद्य वारिधारा इव विभान्ति शोभन्ते। यथा वृषभो वारिधारामगणयित्वैव सानन्दं तत्र तिष्ठति तथा रामोऽपि रावणबाणवर्षामगणयित्वैव युद्धे तिष्ठति ॥ १० ॥

कनकरचितचापमित्यादि—कनकेन सुवर्णेन रचितचापं तीक्ष्णं धनुरुग्रस्य रणशिरसि शीघ्रं सुघोरमतितीक्ष्णं बाणजालं विधून्वन् अयं रामः तीक्ष्णदंष्ट्रो मृगेन्द्रः मत्तं गजपतिम् इव रथगतम् अभियान्तं रावणं पद्भ्यां याति।

तीक्ष्णा दंष्ट्रा यस्येति तम्। जगपतिमृगेन्द्रोपमानेन रावणवधोऽवश्यम्भावीति सूच्यते ॥ ११ ॥

---

१ 'मः—एषः, श' क. २ 'राममुद्दिश्य शरवर्षम' क. अस्मिन् पाठे अक्षरमेकमाधिकम्, ३ 'शीघ्रमुग्रस्य तीक्ष्णं' क. ४ 'न्द्रः। सर्वे—एष उप' क. ५ 'रविजयप्रदेशिकेस्विद् (?)' क. 'रविजयप्रदेशितेस्मिन्' ख. ग. घ.

दितिसुतनाशकरे रथे विभाति।
रजनिचरविनाशकारणः सं-
त्रिपुरवधाय यथा पुरा कपर्दी ॥ १२ ॥

**प्रथमः**—अहो महत् प्रवृत्तं युद्धम्।

शरवरपरिपीततीव्रबाणं
नरवरनैर्ऋतयोः समीक्ष्य युद्धम्।
विरतविविधशस्त्रपातमेते
हरिवरराक्षससैनिकाः स्थिताश्च² ॥ १३ ॥

**द्वितीयः**—अहो तु खलु,

चारीभिरेतौ परिवर्तमानौ
रथे स्थितौ बाणगणान् वमन्तौ।
स्वरश्मिजालैर्धरणिं दहन्तौ
सूर्याविव द्वौ नभसि भ्रमन्तौ ॥ १४ ॥

**तृतीयः**—रावणमपि पश्येतां भवन्तौ।

शरैर्भीमवेगैर्हयान् मर्दयित्वा
ध्वजं चापि शीघ्रं बलेनाभिहत्य।

---

प्रभया कान्त्या। न्विति वितर्के।

महेन्द्रेणेन्द्रेण। मातलिरिन्द्रसारथिस्तेन वाहितः।

रथमारूढवान् स्यन्दनमारुरोह।

सुरविजयेत्यादि—सुरविजयप्रदेशिके सुरविजयप्रदातरि। विजयोपदेष्टरि इति वा।

दितिसुतनाशकरे कृञो हेतुताच्छील्यानुलोम्येषु, इति टप्रत्ययः। कपर्दी शङ्करो यथा त्रिपुरवधाय। पुरा किल शिवः त्रिपुरनामानं दैत्यं रणे जघान इति पुराणादिषु प्रसिद्धिः ॥ १२ ॥

अहो महदिति—शरवरेण श्रेष्ठधनुषा परिपीतास्तीव्रा बाणा यस्मिंस्तम् 'बाण इति बण शब्दे बण गतौ वा संज्ञायां कर्तरि घञ्। नैर्ऋता निर्ऋतेर्दिक्पालस्याप-त्यानि नैर्ऋता राक्षसाः। विरताः विरामं गता विविधाः शस्त्रपाता यस्मिंस्तम्। पारस्परिकं युद्धकौशलं नीरीक्ष्य केचिद् राक्षससैनिकाः केचिच्च वानरसैनिका युद्धं द्रष्टुकामा स्थिताः इत्यर्थः ॥ १३ ॥

चारीभिरेताविल्यादि—चारीभिः परिवर्तमानावेतौ रथे स्थितौ बाणगणान् किरन्तौ इमौ स्वरश्मिजालैर्धरणिं दहन्तौ नभसि भ्रमन्तौ द्वौ सूर्याविव दृश्येते इति शेषः। चारी युद्धगतिविशेषः। धरणिं पृथिवीम् धृ-अच्। नभसि आकाशे ॥१४॥

---

१ 'रिहर' (?). क. २ 'श्च श्च'. क.

महद् बाणवर्षं सृजन्तं नदन्तं
　　हसन्तं नृदेवं भृशं भीषयन्तम् ॥ १५ ॥

**प्रथमः**[1]—एष हि रामः

स्थानाक्रामणवामनीकृततनुः किञ्चित्समाश्वास्य वै
तीव्रं बाणमवेक्ष्य रक्तनयनो मध्याह्नसूर्यप्रभः ।
व्यक्तं मातलिना स्वयं नरपतिर्दत्तास्पदो वीर्यवान्
क्रुद्धः संहितवान् वरास्त्रममितं पैतामहं पार्थिवः ॥ १६ ॥

**द्वितीयः**—एतदस्त्रं,

रघुवरभुजवेगैर्विप्रमुक्तं
　　ज्वलनदिवाकरयुक्तं

---

अथ युद्धस्थितं रावणं निरीक्ष्यान्यतमो विद्याधर अपरावाह–शरैरित्यादि—भीमवेगैः शरैर्हयान् मर्दयित्वा, अतिबलेन शीघ्रं ध्वजं चापि अभिहत्य महद् बाणवर्षं सृजन्तं, नदन्तमथ च नृदेवं हसन्तं, भृशं भीषयन्तं रावणं पश्यैतामित्यन्वयः । भीमो भयावहः वेगो येषां ते भीमवेगाः । यदा बाणाश्चलन्ति वेगेन तदा कातरा साधारणाश्च जनाः बिभ्यति । ध्वजमभिहत्येति पराजयद्योतनाय शत्रोः । नृदेवं रामं हसन्तम् । हसनञ्च स्वस्य वीरता द्योतनाय परश्चोत्साहहीनं कर्तुम् ॥ १५ ॥

स्थानाक्रमेणेत्यादि—किञ्चित् समाश्वास्य स्थानाक्रामणवामनीकृततनुः, तीव्रं तीक्ष्णमागतं बाणमवेक्ष्य रक्तनयनः, माध्यन्दिनसूर्यप्रभः, दत्तमास्पदं स्थानं यस्मै सः, वीर्यवान् पार्थिवः रामः पैतामहं अमितं वरास्त्रमस्त्रश्रेष्ठं क्रुद्धः सन् संहितवान् । पैतामहः पितामहो देवतास्येति 'सास्य देवता, इत्यण् । अथवा पितामहादागतं पैतामहं 'तत आगतः, इति । स्थानक्रमणवामनीकृततनुरिति युद्धकौशलम् । स्थानस्याक्रमणात् तथा हि—

"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् ।
त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥
सन्नद्धं स्यात् समतलं आलीढं तु ततोऽग्रतः ।
दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥

इत्युक्तेषु धन्विनां स्थानेषु । अर्थादालीढस्य स्थानस्याक्रमणाद् वामनीकृततनुत्वं घटते । तीव्रं बाणमवेक्ष्य । तीव्रं क्रूरम् ।

यस्य वाजेषु पवनः फले पावकभास्करौ ॥
इत्युक्तत्वाद् धरायाः पावकभास्करसान्निध्यम् ।

---

१ 'पीड्य' क.　२ 'मः–स्था' क.　३ 'गतीव्रमु' क.

रजनिचरवरं निहत्य संख्ये
पुनरभिगच्छति राममेव शीघ्रम् ॥ १७ ॥

**सर्वे**—हन्त निपातितो रावणः ।

**प्रथमः**—रावणं निहतं दृष्ट्वा पुष्पवृष्टिर्निपातिता ।
एता नदन्ति गम्भीरं भेर्यस्त्रिदिवसद्मनाम् ॥ १८ ॥

**द्वितीयः**—भवतु । सिद्धं देवकार्यम् ।

**प्रथमः**—तदागम्यताम् । वयमपि तावत् सर्वोहितं रामं सम्भावयिष्यामः ।

**उभौ**—बाढम् । प्रथमः कल्पः, ( निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः ।

---

रघुवरभुजेत्यादि—रघुवरभुजवेगविप्रमुक्तं, रघुवरस्य रामस्य या भुजयावेगस्तेन तस्माद्वा विप्रमुक्तम् । महता वेगेन संध्वस्तमित्यर्थः । ज्वलनो वह्निः दिवाकरः सूर्यः ताभ्याम् युता युक्ता तीक्ष्णा धारा निशिताप्रभागो यस्येति तत् एतदस्त्रं संख्ये युद्धे रजनिचरेषु वरं श्रेष्ठं । रावणमित्यर्थः । निहत्य हत्वा पुनर्भूयोऽपि शीघ्रं राममेवाभिगच्छति । पुनरागमनमस्त्रस्य महत्वप्रकाशनार्थम् ॥ १७ ॥

रावणं निहतमित्यादि—रावणं पौलस्त्यं दशाननं निहतं दृष्ट्वा ( देवैः कर्तृभिः ) पुष्पवृष्टिर्निपातिता । रावणहननप्रीता देवाः पुष्पवर्षामकुर्वन्नित्यर्थः । अथ च । एता त्रिदिवसद्मनां देवानां, त्रिदिवे सद्मानि येषां ते तेषाम् । भेर्यः गम्भीरं नदन्ति ॥१८॥

तदागम्यतामित्यादि—आगम्यतामिति भावे यक् प्रत्ययः ।

बाढमित्यादि—बाढम् समुचितम् , योग्यम् , ओम् , स्वीकारे ।

प्रथमः कल्पः—

अभीष्टवस्तुनां सिद्धौ येन केनापि चोदितः ।
प्रथमः कल्प इत्येव प्रवदत्यासनायकः ॥
मुख्यः स्यात् प्रथमः कल्पः ॥

अस्मिन्नङ्के रामरावणयोर्युद्धस्य कथा शस्त्राणां
वर्णनं च विद्याधरमुखेन ।

---

१ 'संघे' क. २ 'न्त निहतो'. क. 'न्तपति'. ग. ३ 'रा म'. क. ४ 'वर्गणसहि'. क. ५ 'सभाजयि'. क. ख. ग. ६ 'विष्कम्भकः । (ततः प्रविशति रामः)' ख. एतत्पाठानुरोधेन आहत्य षडेवाङ्काः ।

# अथ सप्तमोऽङ्कः ॥

( ततः प्रविशति रामः )

**रामः**—हत्वा रावणमाहवेऽद्य तरसा मद्बाणवेगार्दितं
कृत्वा चापि विभीषणं शुभमतिं लंकेश्वरं साम्प्रतम् ।
तीर्त्वा चैवमनल्पसत्वचरितं दोर्भ्यां प्रतिज्ञार्णवं
लंकामभ्युपयामि बन्धुसहितः सीतां समाश्वासितुम् ॥१॥

( प्रविश्य )

**विभीषणः**—जयतु देवः ।
एषा हि राजंस्तव धर्मपत्नी
त्वद्बाहुवीर्येणविधूतदुःखा ।

---

अथ कृतलङ्केशविमर्दो रामः स्ववीर्यं कथयन् प्रविशति—

हत्वेति—अद्य आहवे मद्बाणवेगार्दितं रावणं तरसा हत्वा, अपि च साम्प्रतं शुभमतिं विभीषणं लङ्केश्वरं कृत्वा, अनल्पसत्वचरितं प्रतिज्ञार्णवं चैव दोर्भ्यां तीर्त्वा, बन्धुसहितः सीतां समाश्वासितुं लङ्कामभ्युपयामि ।

आहवे संग्रामे, आहूयन्तेऽत्रेत्याहवः आङ्गि युद्धे इत्यप्, सम्प्रसारणम् । तरसा बलेन । मद्बाणानां वेगैरर्दितस्तम् । शुभे धर्मविषये मतिर्यस्येति तम्, एतेन च रावणहनने रावणस्याशुभैव मतिः कारणम् । अनल्पा महान्ता ये सत्वा मनुष्यास्तेषां चरितमिव चरितं यस्मिंस्तम्. प्रतिज्ञार्णवं प्रतिज्ञासमुद्रं तीर्त्वा । यत् प्रतिश्रुतं तदवश्यं विधेयमिति महतां चरित्रम् । दुरात्मनाञ्च मनस्यन्यद् वचस्यन्यत् कर्मणि चान्यदेवेति भेदः । बन्धुसहितः सीतां समाश्वासितुमिति सर्वेऽपि बान्धवा सीतायाश्चरित्रे निश्शङ्का अत एव सह यान्ति अन्यथा त्यजेयुरिति भावः । सीतासमाश्वासन इति पाठे निमित्तसप्तमी ज्ञेया ॥ १ ॥

विभीषणः सीतां समर्पयन्नाह—एषा हीति । हे राजन् हि त्वद्बाहुवीर्येण विधूतदुःखा एषा तव धर्मपत्नी पुरा दैत्यकुलेन च्युता लक्ष्मीरिव सा तव प्रसादात् समुपस्थिता ॥

---

१ 'तास'. क. ग. ङ. च. 'श्वासने' क. ग. ङ. च.

२ 'श्वासने'. क. ग. ङ. च.

३ 'तुम्' (प्रविश्य) लक्ष्मणः—जयत्वार्यः । आर्य एषा ह्यार्यायस्य समीपमुपसर्पति ।
रामः—वत्स लक्ष्मण, अपायाच्च हि वैदेह्या उषिताया रिपुक्षये ।
दर्शनात् साम्प्रतं धैर्यं मन्युर्मे वारयिष्यति ॥
लक्ष्मणः—यदाज्ञापयत्यार्यः (निष्क्रान्तः) (प्रविश्य)' ख

लक्ष्मीः पुरा दैत्यकुलच्च्युतेव
तव प्रसादात् समुपस्थिता सा ॥ २ ॥

**रामः**[1]—विभीषण, तत्रैव तावत् तिष्ठतु रजनिचरावमर्शजातकल्मषा[2] इक्ष्वाकुकुलस्यांकभूता[3] राजानं दशरथं[4] पितरमुद्दिश्य न युक्तं[5] भो लंकाधिपते[6] मां द्रष्टुम् ।

अपि च,

मज्जमानमकार्येषु पुरुषं विषयेषु वै ।
निवारयति यो राजन् स मित्रं रिपुरन्यथा ॥ ३ ॥

**विभीषणः**—प्रसीदतु देवः ।

**रामः**—नार्हति भवानतःपरं पीडयितुम् ।

( प्रविश्य )

**लक्ष्मणः**—जयत्वार्यः । आर्यस्याभिप्रायं श्रुत्वैवाग्निप्रवेशाय प्रसादं प्रतिपालयत्यार्या ।

**रामः**[7]—लक्ष्मण, अस्याः पतिव्रतायाः छन्दमनुतिष्ठ ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः । ( परिक्रम्य[8] ) भोः कष्टम् ।

---

धर्माय पत्नी धर्मपत्नी । विधूतानि पापानि यस्याः सा विधूतपापा व्यपगतकिल्बिशा । दैत्याः दितेरपत्यानि "दित्यदित्यादित्ये"ति ण्यः । दैत्यकुलेन दैत्यसमूहेन च्युता । पुरा किल समुद्रमंथनावसरे समुद्रान्निर्गता लक्ष्मीः पूर्वं प्रसह्य दैत्यैर्गृहीता पश्चाद् विष्णुना दैत्याःसम्मोहिता लक्ष्मी च गृहीतेति पुराणप्रसिद्धिः ।

सा रावणवधात् पूर्वं दुःखान्विता ॥ २ ॥

विभीषणेत्यादि—उद्दिश्य निर्दिश्य निमित्तीकृत्य । न खलु मद्गौरवं निमित्तीकृत्य द्रष्टुं न युक्ता इत्यर्थः ।

मज्जमानमित्यादि—हे राजन् वै यः अकार्येषु विषयेषु मज्जमानं पुरुषं निवारयति स मित्रम् अन्यथा रिपुरेव ॥ अकार्येषु निन्दनीयेषु दुष्कर्मसु विषयेषु इन्द्रियोपभोगसाधनेषु । विसिन्वन्ति निबध्नन्तीन्द्रियाणि, षिञ् बन्धने पचादित्वादच् । 'परिनिवि' इतिषत्वम् ॥ ३ ॥

अस्याः पतिव्रतायाः छन्दमभिलाषमनुतिष्ठ यथेयं पतिव्रताभिलषति तथा विधेहीत्यर्थः ।

---

१ मः—त'. क. २ 'रावमानक'. क. ३ 'कुलसमुद्यतपताकाभूतं रा'. क. 'कुलावसानसमुद्यतपताकाभूतं रा'. ख. ४ 'यमुद्दि'. क. ५ 'क्तं ल'. क ६ 'ते वक्तुं माम्'. च. ७ 'मः—अ'. क. ८ '( किञ्चिद् गत्वा )'. ख.

विज्ञाय देव्याः शौचं च श्रुत्वा चार्यस्य शासनम् ।
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मम ॥ ४ ॥

कोऽत्र ।

( प्रविश्य )

[ह]नुमान्—जयतु कुमारः ।

[ल]क्ष्मणः—हनुमन् यदि ते शक्तिरस्ति, एवमाज्ञापयत्यार्यः ।

[ह]नुमान्—अत्र किं तर्कयति कुमारः ।

[ल]क्ष्मणः—निष्फलो मम तर्कः । अथवा वयमार्यस्याभिप्रायमनुवर्ति-
तारः । गच्छामस्तावत् ।

[ह]नुमान्—यदाज्ञापयति कुमारः । (निष्क्रान्तौ)

( प्रविश्य )

[ल]क्ष्मणः—प्रसीदत्वार्यः । आर्य आश्चर्यमाश्चर्यम् । एषा ह्यार्या,

विकसितशतपत्रदामकल्पा
ज्वलनमिहाशु विमुक्तजीविताशा ।
श्रममिह तव निष्फलं च कृत्वा
प्रविशति पद्मवनं यथैव हंसी ॥ ५ ॥

---

विज्ञायेत्यादि—देव्याश्च शौचं विज्ञायार्यस्य च शासनं विज्ञाय धर्मस्नेहान्तरे न्यस्ता मम बुद्धिर्दोलायते । धर्मः ज्येष्ठस्य भ्रातुश्छन्दानुवर्तित्वं स्नेहश्च प्रेम तयोरन्तरे मध्ये न्यस्ता पतिता मम बुद्धिर्दोलायते दोलेवाचरति । यथा दोला कदाचिद्गच्छति कदाचिन्नायाति तथैव धर्मश्च निरीक्ष्याग्नौ प्रवेशयितुं मन ईहते स्नेहश्च तस्मान्निवर्तयति ॥ ४ ॥

हनुमन्नित्यादि—एवमाज्ञापयति अग्निप्रवेशयोग्या इत्याज्ञापयति । यदि ते शक्तिरस्ति निरोद्धुं वा यथोक्तमनुष्ठातुं वा इत्यर्थः ।

प्रसीदत्वार्यः इत्यादि—प्रसादने च हेतुराश्चर्यमेव ।

विकसितेत्यादि—विकसितानि प्रफुल्लानि यानि शतपत्राणि कमलानि 'सहस्रपत्रं कमलं शतपत्रं कुशेशय,' मित्यमरः । तेषां यद्दाम माला तत्कल्पा तत्तुल्या । नितरां कोमलाङ्गीत्यर्थः । अथ च विमुक्ता जिविताशा जीवनेच्छा यया सा । ज्वलनं प्रविष्टस्तु न कश्चिज्जीवितीति विचारेण विमुक्तजीवनाशेति विशेषणम् । अत एवेह तव रामस्य श्रमं निष्फलं कृत्वेयं सीता हंसी पद्मवनमिवाशु इह ज्वलनं प्रविष्टा । स्वसतीत्वदर्शनाय वह्नौ प्रविष्टेत्यर्थः । हंसी पद्मवनं यथेति कथनेन वह्निप्रवेशे पीडाभावः सूच्यते ॥ ५ ॥

---

१ 'द्विर्दो'. क. २ 'र्कः । ननु व'. ग. च. ३ 'वर्त्तयिता'.क. ख.ङ. 'र्तयिष्यामः'. ग. ४ 'तथाकृत्वा प्र'. ङ. ५ 'णः—एषा'. क.

**रामः**—आश्चर्यमाश्चर्यम् । लक्ष्मण निवारय निवारय ।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः ।

( प्रविश्य )

**हनुमान्**—जयतु देवः ।

> एषा कनकमालेव ज्वलनाद् वर्धितप्रभा ।
> पावना पावकं प्राप्य निर्विकारमुपागता ॥ ६ ॥

**रामः**—(सविस्मयं) किमिति किमिति ।

**लक्ष्मणः**—अहो आश्चर्यम् ।

( प्रविश्य )

**सुग्रीवः**—जयतु देवः ।

> को नु खल्वेष जीवन्तीमादाय जनकात्मजाम् ।
> प्रणम्यरूपः संभूतो ज्वलतो हव्यवाहनात् ॥ ७ ॥

**लक्ष्मणः**[३]—अये अयमार्यां पुरस्कृत्येत एवाभिवर्तते भगवान् विभावसुः ।

**रामः**—अये अयं भगवान् हुताशनः । उपसर्पामस्तावत् ।

---

एषेति—ज्वलनाद् वर्धितप्रभा कनकमालेवैषा पावना सीता पावकं प्राप्य निर्विकारमुपागता । कनकस्य माला कनकमाला । ज्वलनाद् वह्नौ तापनाद् वर्धितप्रभा । वह्नौ च तप्यमानं सुवर्णं कान्तिमान् भवतीति । यथा च—

'धनञ्जये हाटकसंपरीक्षेति, पावनं शुद्धिः । पावनमिति भावे ल्युट् । पावनाद् वर्धितप्रभाद् इति रम्यः पाठः ॥ ६ ॥

अग्नौ प्रवेशेऽपि जीवन्तीं सीतामालक्ष्य सुग्रीव आह को नु खल्विति । न्विति वितर्के कः खल्वेषः प्रणम्यरूपः पुरुषः जीवन्तीं जनकात्मजामादाय ज्वलतो हव्यवाहनात् संभूतः । प्रणम्यः तेजोमयत्वान्नमस्कार्यः रूपो यस्येति सः । हव्यवाहनोऽग्निः हव्यं वाहयतीति देवान्नयतीति हव्यवाहनः 'हव्य ( कव्य ) पुरीषपुरीष्येषु ञ्युट् ॥ ७ ॥

विभावसुः सूर्यः ।

हुतमश्नातीति हुताशनोऽग्निः ।

---

१ 'पवनावर्धितप्रभात् । पावकात्पावनं प्रा'. ख. च २ 'हनः'. क ३ 'विभीषणः'. घ.

( सर्वे उपसर्पन्ति )

( ततः प्रविशत्यग्निः सीतां गृहीत्वा )

**अग्निः**—इमां गृहीष्व राजेन्द्र सर्वलोकनमस्कृताम् ।
अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम ॥ ८ ॥

अपि च,

इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम् ।
सा भवन्तमनुप्राप्ता मानुषीं तनुमास्थिता ॥ ९ ॥

**रामः**—अनुगृहीतोऽस्मि ।

जानतापि च वैदेह्याः शुचितां धूमकेतन ।
प्रत्ययार्थं हि लोकानामेवमेव मया कृतम् ॥ १० ॥

( नेपथ्ये दिव्यगन्धर्वा गायन्ति )

नमो भगवते त्रैलोक्यकारणाय नारायणाय ।

---

इमां गृहीष्वेति—अपापां किल्बिषरहिताम् । अक्षतामग्नौ प्रवेशेऽपि क्षतरहिताम् । क्षत इति सवद्रक्तपूयादौ व्रणे । पुरुषोत्तम राम ॥ ८ ॥

अग्निः सीतां पुरस्कृत्य निष्पापेयमिति दर्शयन् राममाह—

इमां भगवतीमित्यादि । इमां जनकात्मजां सीतां त्वं भगवतीं लक्ष्मीं जानीहि । सा लक्ष्मी मानुषीं तनुमास्थिता साक्षाद्देवी सत्यपि मानुषं रूपं विधाय भवन्तं राममनुप्राप्ता । त्वयेयं साक्षाद्देवी ज्ञातव्या नेयं साधारणा काचिन्मानुषीति ॥ ९ ॥

इदानीं रामः स्वं भावं प्रदर्शयन्नग्निमाह—जानतापीति । हे धूमकेतन धूमः केतनं ध्वजचिह्नं यस्य सः धूमकेतनोऽग्निस्तत्संबुद्धौ हे धूमकेतन अग्ने वैदेह्याः शुचितां जानतापि मया एवमेव लोकानां प्रत्ययार्थमिदं मया कृतम् । लोकाः सीतायाः सतीत्वे निश्शंका भवेयुरिति भावमेव पुरस्कृत्य मयेदं कृतं नान्यद्विचार्येत्यर्थः । प्रत्ययो विश्वासः तदर्थं । लोकान् प्रत्याययितुमित्यर्थः ॥ १० ॥

गन्धर्वाः गायकाः ।

त्रैलोक्यकारणाय लोकत्रयोत्पादकाय । नारायणाय विष्णवे । नारा अयनं यस्येति नारायणः तथा च मनुः—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ अ० १ । १० ॥

हे जगत्त्रयपते जगत्त्रितयस्वामिन् ब्रह्मा परमेष्ठी ते तव हृदयम् हृदयस्थानी । हृदयमिति मनसः पर्यायः 'हृदयं मानसे बुक्कोरसोरपि' इति मेदिनी । हृदयं तु विश्वस्य महदायतनमत एव ब्रह्मणः परमात्मनो हृदयत्वेनोपमा तथा हि—

---

१ 'त्वा' अग्निः—एष भगवान् नारायणः । जयतु देवः । रामः—भगवन् नमस्ते । अग्निः—न मे नमस्कारं कर्तुमर्हति देवेशः । इमां'. ख. २ 'तोपि'. क. ३ 'शौचकं'. क.

**ब्रह्मा ते हृदयं जगत्त्रयपते रुद्रश्च कोपस्तव**
**नेत्रे चन्द्रदिवाकरौ सुरपते जिह्वा च ते भारती।**
**सब्रह्मेन्द्रमरुद्गणं त्रिभुवनं सृष्टं त्वयैव प्रभो**
**सीतेयं जलसम्भवालयरता विष्णुर्भवान् गृह्यताम् ॥११॥**

( पुनर्नेपथ्ये[1] अपरे गायन्ति )

**मग्नेयं हि जले वराहवपुषा भूमिस्त्वयैवोद्धृता**
**विक्रान्तं भुवनत्रयं सुरपते पादत्रयेण त्वया।**

---

पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम्।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्॥ इति।

रुद्रः शिवश्च तव कोपः। रुद्रः रोदयति पापिन इति। यं प्रति कश्चित्छक्तिसम्पन्नः कुप्यति तदा स रोदतीती कोपस्य रुद्रत्वम्। चन्द्रदिवाकरौ तव नेत्रे। रात्रिन्दिवं सर्वस्यावलोकनात्। हे सुरपते ते जिह्वा भारती सरस्वती वाचामधिष्ठात्री देवी। हे प्रभो सब्रह्मेन्द्रमरुद्गणं ब्रह्मेन्द्रमरुद्गणसहितं त्रिभुवनं लोकत्रयं त्वयैव सृष्टम्। नान्यः कश्चित्त्वदितरः जगत्त्रयस्रष्टेति भावः। जलं सम्भव उत्पत्तिस्थानं यस्येति सः जलसम्भवः जलसम्भव आलयो यस्येति सः, तत्र रता। जलसम्भवालयस्तु विष्णुरितिप्रागुक्तम्। इयं सीता भवान् विष्णुः गृह्यताम्॥ ११॥

मग्नेयमित्यादि—हे प्रभो जले मग्ना इयं पृथिवी वराहवपुषा त्वयैवोद्धृता त्वमेव वाराहं रूपमास्थाय जलमग्नां पृथिवीमुद्धारत्यर्थः। तथा च श्रुतिः—स (प्रजापतिः) वराहरूपं कृत्वोपन्यमज्जत् तै १। १। ३। ६॥

हे सुरपते त्वया पूर्वं पादत्रयेण भुवनत्रयं विक्रान्तं व्याप्तम्। पुरा किल विष्णु विष्णुर्बलिं छलयितुं पादत्रयेण भूमिं व्यक्रामदिति पुराणप्रसिद्धिः। तथा च श्रुतौ यज्ञो विष्णुः स देवेभ्यः इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पार अथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेन श० १। ६। ३। ६।

विष्णुपुराणे च—

मन्वन्तरे तु संप्राप्ते तथा वैवस्वते द्विज।
वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह॥
त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा येन महात्मना
पुरन्दराय त्रैलोक्यं दत्तं निहतकण्टकम्॥

**पूर्वोक्तं कथनं द्रढयितुमाह—स्वैरमित्यादि। यथा साम्प्रतमिदानीं स्वैरं स्वच्छन्दं रूपमुपाश्रितेन भवता आहवे संग्रामे रावणं हत्वा देवा विद्वांसः इन्द्रादयो वा देवत्वेन प्रसिद्धा समाश्वासिताः। रावणेन खलु विद्वांसः ऋषय इन्द्रादयश्च देवाः धर्षिता इति प्रसि-**

---

1 'पुनर्नेपथ्ये' इति नास्ति. क.

स्वैरं रूपमुपस्थितेन भवता देव्या यथा साम्प्रतं
हत्वा रावणमाहवे न हि तथा देवाः समाश्वासिताः ॥१२॥

**अग्निः**—भद्रमुख एते देवदेवर्षिसिद्धविद्याधरगन्धर्वाप्सरोगणाः स्वविभवैर्भवन्तं वर्धयन्ति ।

**रामः**—अनुगृहीतोस्मि ।

**अग्निः**—भद्रमुख अभिषेकार्थमित इतो भवान्

**रामः**—यदाज्ञापयति भगवान् । ( निष्क्रान्तौ )

( नेपथ्ये )

जयतु देवः । जयतु स्वामी । जयतु भद्रमुखः । जयतु महाराजः जयतु रावणान्तकः । जयत्वायुष्मान् ।

**विभीषणः**—एष एव महाराजः,

तीर्त्वा प्रतिज्ञार्णवमाहवेऽद्य सम्प्राप्य देवीं च विधूतपापाम् ।
देवैः समस्तैश्च कृताभिषेको विभाति शुभ्रे नभसीव चन्द्रः ॥१३॥

**लक्ष्मणः**—अहोतु खल्वार्यस्य वैष्णवं तेजः ।

यमवरुणकुबेरवासवाद्यै-
स्त्रिदशगणैरभिसंवृतो विभाति ।
दशरथवचनात्कृताभिषेक-
स्त्रिदशपतित्वमवाप्य वृत्रहेव ॥ १४ ॥

( ततः प्रविशति कृताभिषेको रामः सीतया सह ,

**रामः**—वत्स लक्ष्मण, ·

---

द्धम् । तेन च साम्प्रतं रावणं हत्वा देव्याः शुद्धया यथा देवा समाश्वासिता तथा न पूर्वं समाश्वासिता इत्यर्थात् सिद्धम् ॥ १२ ॥

भद्रमुख इति—स्वविभवैः स्वैरैश्वर्यैर्भवन्तं वर्धयन्ति ।

तीर्त्वा प्रतिज्ञेति—प्रतिज्ञार्णवं प्रतिज्ञासमुद्रम् । विधूतानि नष्टानीत्यर्थः ॥१३॥

यमवरुणकुबेरेत्यादि—त्रिदशानां देवानां गणैः समूहैरभिसंवृतः । दशरथवचनेन कृतोऽभिषेको यस्य सः । वृत्रहा इन्द्र इव ॥ १४ ॥

---

१ 'ते देवर्षि'. क. २ 'प्सरसां ग'. क. ३ 'नमोस्तु सर्वदेवेभ्यः'. क. ४ 'खः । जयतु रा'. क. ५ 'जयत्वायुष्मान्' इति नास्ति. क. ६ 'लक्ष्मणः—'. क. ग. ७ 'विभीषणः—अहोतुखलु देवस्य'. ख. ग. ८ 'प्य देवराजः'. ग. घ.

येनाहं कृतमंगलप्रतिसरो भद्रासनारोपितो-
ऽप्यम्बायाः प्रियमिच्छता नृपतिना भिन्नाभिषेकः कृतः ।
व्यक्तं दैवगतिं गतेन गुरुणा प्रत्यक्षतः साम्प्रतं
तेनैवाद्य पुनः प्रहृष्टमनसो प्राप्ताभिषेकः कृतः ॥ १५ ॥

अग्निः—भद्रमुख, एता हि महेन्द्रनियोगाद् भरतशत्रुघ्नपुरःसरौ तयो भवन्तमुपस्थितौः । इमे महेन्द्रादयोऽमृतभुजो

रामः—अनुगृहीतोऽस्मि ।

अग्निः—भद्रमुख किं ते भूयः प्रियमुपहरामि ।

रामः—यदि मे भगवान् प्रसन्नः, किमतः परमहमिच्छामि ।

( भरतवाक्यं )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ १६ ॥

---

ततः प्रविशति विमाने देवैर्दशरथवचनादभिषिक्तो रामः । येनाहमित्यादि—येन पित्रा दशरथेन कृतो विहितो मङ्गलप्रतिसरो हस्तसूत्रं यस्य सः । हस्तसूत्रे प्रतिसरोऽस्त्रियाम्, इत्यमरः । अभिषेकादि मङ्गलकृत्यसमये हस्ते सूत्रं बध्नंति लोके । दैवगतिं स्वर्गम् । गम्यत इति गतिः ॥ १५ ॥

ततः विमानादुत्तार्य लक्ष्मणादीनां समीपं प्राप्य । वत्स लक्ष्मण इत्यादि ग्रन्थसम्बन्धः । भरतशत्रुघ्नौ पुरोधाय इत्यर्थः ॥ १६ ॥

यदि मे इत्यादि—यदि मे भगवान् प्रसन्नः किमतः परमिच्छामि । अतः प्रसादात् परं किमिच्छामि । भवत्प्रसाद एवापेक्षित इत्यर्थः ।

( भरतवाक्यम् )

भवन्त्वित्यादि—गावः अरजसः भवन्तु ।
'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु ।
भूमौ पशौ च गोशब्दो दशार्थः कीर्तितो बुधैः ॥'

गावः दिशः अरजसः रजोविहीनाः भवन्तु । अनेन वर्षसम्पत्त्या सस्यादिसमृद्धिरुक्ता । गावः दृष्टयः ज्ञानदृष्टयः विरजसः रजोगुणविहीनाः भवन्तु । तेनैव तमसश्च विनाश उक्तः ।

---

१ 'नसः'. क. २ 'भो राजन् ए'. क, 'भो राजन् तेन हि म'. ष. ३ 'राः सर्वाः प्र'. घ. ४ 'ताः । रामः—भगवन् प्रहृष्टोस्मि । अग्निः—इमे'. ख. ५ 'ग्निः—किं'. ग. ६ 'किमुत्तरमह'. क. ७ 'राजा सिंहः'. क.

सप्तमोऽङ्कः ।

( निष्क्रान्ताः सर्वे )

सप्तमोऽङ्कः[1] ।

## अभिषेकनाटकं समाप्तम्[2] ।

'सत्वोदये सुखं प्रीतिः शान्तिर्लज्जांगलाघवम् ।
क्षमा धृतिरकार्पण्यं दमो ज्ञानप्रकाशनम् ॥
रजोगुणोदये लोभः सन्तापः कोपविग्रहौ ।
अभिमानो मृषावादः प्रवृत्तिर्डम्भ इत्यपि ॥
तमोगुणोदये तन्द्री मोहो निद्रांगगौरवम् ।
आलस्यमप्रबोधश्च प्रमादश्चैवमादयः ।
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणयुक्तास्तु अधो यास्यन्ति तामसाः ॥ इति ॥

---

१ 'षष्ठोऽङ्कः'. ख. २ 'श्रीरस्तु' क. 'श्रीरामायणं समाप्तं'. ख. 'रामनाटकं समाप्तं'. च.

# वृत्तलक्षणम् ।

अंक—श्लो. ( त्रिष्टुप् ११. ]

(१) मा तौ मौ चे च्छा लिनी वेद लो कैः ।

म त त ग ग
१—१३ — — — । — — ⏑ । — — ⏑ । — । — ।
स न्द ष्टो—ष्ठ श्च राड—सं र क्ष—ने—श्रः

(२) उपेन्द्रवज्रा जतजास्ततो गौः ।

ज त ज ग ग
⏑ — ⏑ । — — ⏑ । ⏑ — ⏑ । — । —

| | |
|---|---|
| १—२६ | मया कु—तं दोष—मपास्य—बु—ध्या |
| ३—३. | कथं क—थं भो न—ववाक्य—वा—दिन् |
| ३—१८ | प्रसीद—राजन् व—चनं हि—तं—मे |
| ४—६ | शैलैर्ङ्ग—मैस्तं प्र—ति मुष्टि—ब—न्धैः |
| ५—७ | चलत्त—रंगाह + तभीम—वे—गं |
| ५—७७ | उदीर्णं—सत्वेन—महाब—ले—न |

(३) स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

त त ज ग ग
— — ⏑ । — — ⏑ । ⏑ — ⏑ । — । —

| | |
|---|---|
| २—१४ | सीते त्य—ज त्वं त—तमुप्र—व—यँ |
| ६—१४ | वारीभि—रेतौ प—रिवर्त्त—मा—नौ |
| ७—२ | एषा हि—राजंस्त—व धर्म—प—त्नी |
| ७—१३ | तीर्त्वा प्र—तिज्ञार्णं—वमाह—वे—या |

( जगती. १२ )

(१) जतौ तु वंशस्थमुदीरितं जरौ ।

ज त ज र
⏑ — ⏑ । — — ⏑ । ⏑ — ⏑ । — ⏑ —

१—२ कुतो नु—खल्वेष—समुत्थि—तो ध्वनिः

(२) द्रुतविलम्बितमाह नभौ भरौ ।

न भ भ र
⏑ ⏑ ⏑ । — ⏑ ⏑ । — ⏑ ⏑ । — ⏑ —

३—४ युधिष्ठि—गत्रय—भीतिकृ—तोपि मे

(३) भुजंगप्रयातं भवेद्यैश्चतुर्भिः ।

य य य य

⏑ — — । ⏑ — — । ⏑ — — । ⏑ — — ।

६—१५ शरैर्भी—मवेगै—र्हयान्म—र्दयित्वा

(४) बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ।

म म य य

— — — । — — — । ⏑ — — । ⏑ — —

६—५ बाणाःपा—त्यन्ते रा—क्षसैर्वा —नरेषु

२—१ लब्ध्वा वृ—त्तान्तं रा—मपत्न्याः—खगेन्द्रात्

## अतिजगती (१३)

(१) त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।

म न ज र ग

— — — । ⏑ ⏑ ⏑ । ⏑ — ⏑ । — ⏑ — । —

१—७ संप्राप्ता —हरिव —रबाहु —संप्रगु —प्ता

१—१० शक्रो वा—भवतु —गतिःश—शांकव —क्त्रे

१—१७ युक्तं भो—नरप —तिधर्म —मास्थिते—न

३—१६ दिव्यास्त्रै—स्त्रिदश—गणाम —याभिभू —ता

## शक्वरी (१४)

(१) उक्ता वसन्ततिलका त भ जा ज गौ गः ।

त भ ज ज ग ग

— — ⏑ । — ⏑ ⏑ । ⏑ — ⏑ । ⏑ — ⏑ । — —

१—१ योगप्रधि —पुत्रम —खविघ्न —कराभि —ह —न्त

१—४ मत्साय —कानिह —तभिन्न —विकीर्ण —दे —हं

१—६ तारे वि —मुग्रम —मवक्र —मनिन्दि—तां—गि

१—११ तारेम —याखलु —पुराम्र —तमन्थ —ने —पि

३—२० नक्रश्च —रापश —दराव —णराघ —वं —तं

३—२६ अथैव —तंकम —ललोच —नमुग्र —चा —पं

४—७ क्रुद्धस्य —यस्यपु —रतःस —हितोप्य —श —क्रः

४—१३ नाराय —णस्यन —ररूप —मुपाश्रि —त —स्व

४—२३ अस्ताद्रि —मस्तक —गतःप्र —तिसंह —तां —शु

५—४ एषा वि —हायभ —वनंम —मसंप्र —या —ता

५—७ सीतेत्य —जत्वम —रविन्द —पलाश —ने —त्रे

५—१३ ह्रावत्स —सर्वज —गतांघ्र —रक्तत्क —ता —क्ष

५—१६ वज्रीभ —कुंभत —टभेद —कठोर —धा —रः

प्रविश —चदुर्ग —तमंर —सातलं —वा

३–२२ अभिह —तवर —वप्रगो —पुराद्यां

रघुव —रकार्यु —कनाद —निर्जित —स्त्वं

४—३ सजल —जलध —रेन्द्रनी —लनीरो

विलुलि—तफेन —तरंग —चारुहा —रः

४—५ सजल —जलद —सन्निभ —प्रकाशः

कनक —मयाम —लभूष —णोज्वला —गः

४—१२ ममश —रपरि —दग्धतो —यपंकं

हतश —तमत्स्य—विकीर्ण —भूमिभा —गं

४—१८ ममश —रवर —वातपा —तभग्ना

कपिव —रसैन्य —तरंग —ताडिता —न्ता

५–१३ मदन —वशग —तोमहा —नर्थ

सचिव —वचोप्य—नवेक्ष्य —वीरमा —नी

६—२ रजनि —चरश —रीरनी —रकीर्णा

कपिव —रवीचि —युताव —रासिन —का

६—१२ सुरव —रजय —दर्पदे —शिकेस्मिन्

दितिसु —तनाश —करेर —थेविभा —ति

६—१३ शरव —रपरि —पीततो —त्रबाणं

नरव —रनैऋ —तयोःस —मीक्ष्ययु —द्धं

६—१७ रघुव —रभुज —वेगवि —प्रमुक्तं

ज्वलन —दिवाक —रयुक्त —तीक्ष्णधा —रं

७—५ विकसि —तशत —पत्रदा —मकल्पा

ज्वलन—मिहाशु —विमुक्त —जीविता —शा

७—१४ यमव —रुणकु —बेरवा —सवाद्यैः

त्रिदश —गणैर —भिमंत्र —तोविभा —ति

# NOTES.

## Act I

P.1. नान्द्यन्ते etc. नान्दी praise of a deity. Particularly, the benedictory verse or verses recited as a sort of prologue at the beginning of a Drama.

आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥

or

देवद्विजनृपादीनामाशीर्वचनपूर्विका ।
नन्दन्ति देवता यस्यां तस्मान्नान्दीति कीर्तिता ॥

or

आशीर्नमस्क्रियारूप! श्लोकःकाव्यार्थसूचकः ।
नान्दी ... ... ... ॥

The word is derived from the root नन्द् to rejoice. The author of नाट्यप्रदीप says in the same meaning—

नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।
यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥

सूत्रधारः (the thread-holder) a stage-manager, a principal actor who arranges the cast characters and instructs them, and takes a prominent part in the Prastavana *or* Sthapana or prelude. He is thus defined:—

नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात् स बीजकम् ।
रङ्गदैवतपूजाकृत् सूत्रधार इति स्मृतः ॥

P.2. योगाधिपुत्र etc. गाधिपुत्र is an epithet of विश्वामित्र. गाधि is the name of the father of विश्वामित्र who is supposed to have been an incarnation of Indra and born as the son of Kausamba. मख a sacrifice. विघ्नं कुर्वन्तीति विघ्नकराः, गाधिपुत्रस्य मखः, गाधिपुत्रमखस्य विघ्नकराः, तेषामभिहन्ता। अभिहन्ता destroyer विराधखरदूषणवीर्यहन्ता destroyed the power of the Raksasas विराध, खर and दूषण।

विराध is the name of a powerful राक्षस slain by Rama. खर is the name of a demon, half brother to Ravana and slain by Rama. दूषण is the name of a demon, one of the generals of रावण, and slain by Rama. दर्पे arrogance. उन्नत raised. उल्वण clotted, copious. कबन्ध a headless trunk especially when it retains life. Name of a mighty demon mentioned in the Ramayana. While Rama and Lakshmana lived in the Dandaka forest, कबन्ध attacked them and was slain by them. It is said that, though at first a heavenly being, he was cursed by Indra to assume the form of a demon and to be in that state till killed by Rama and Lakshmana.

एवं etc. आर्यमिश्राः an assembly of respectable men. The word आर्य often used in theatrical language as an honorific adjective and a respectful mode of address. It means revered or honoured sir. The following rules are laid down for the use of आर्य in addressing persons:—(1) वाच्यौ नटी सूत्रधारावार्यनाम्ना परस्परम् । (2) वयस्योत्तमैर्वाच्यो मध्यैरार्येति चाग्रजः । (3) (वक्तव्य) अमात्य आर्येति चेतरैः । (4) स्वेच्छयानामभिर्विप्रैः विप्र आर्येति चेतरैः । Or a man who is faithful to the religion and laws of his country

कर्तव्यमाचरन् कार्यं अकर्त्तव्यमनाचरन् ।
तिष्ठति प्राकृताचारे स वा आर्यं इति स्मृतः ॥

विज्ञापयामि I shall inform. विज्ञापनव्यग्रे when I intend to inform (the audience). अङ्ग a vocative particle has many meanings. The Lexicographers give the following senses of the word–

क्षिप्रे च पुनरर्थे च संगमासूययोस्तथा ।
हर्षे सम्बोधने चैव ह्यंगशब्दः प्रयुज्यते ॥

But here it denotes astonishment. नेपथ्य the meaning of the word is decoration. The space where the actors attire themselves, which is always behind the curtain. नेपथ्ये behind the curtain. नेपथ्यस्येदं नैपथ्यं the same meaning. सुग्रीव the etymology of the word is सुष्ठु ग्रीवा अस्य having a beautiful

neck. Name of the monkey-chief and brother of Vali. By the advice of Kabandha Rama went to Sugriva who told him how his brother had treated him and besought his assistance in recovering his wife, promising at the same time that he would assist Rama in recovering his wife Sita. Rama therefore killed Vali, and installed Sugriva on the throne. He then assisted Rama with his hosts of monkeys in conquering Ravana and recovering Sita. पारिपार्श्वक is an assistant of the manager of the play or one of the interlocutors in the prologue. भाव is a *term of address to* a learned *or* venerable man in dramas.

P 3. कुतो नु etc. कुत: from where. नु a particle having an interrogative force and implying some 'doubt' 'uncertainty'. समुत्थित risen from. श्रोत्रविदारण breaking ears. प्रचण्डवात powerful wind. उद्धत raised pp. (श्रोत्रौ विदारयतीति श्रोत्रविदारण: piercing the ears. Here विदारण has the force of an adjective). बलाहक a kind of crane, a cloud, (a mountain), the name of one of the seven clouds appearing at the destruction of the world. भीमगामी the word गामी is used only at the end of a compound word, and it means, moving, walking, going, passing over, भीमं यथा तथा गच्छतीति भीमगामी ।

मार्ष etc. मार्ष a respectable man used in dramas in the vocative as a respectful mode of address by Sutradhara to one of the principal actors सीतापहरण Sita is the name of the daughter of Janaka, king of Mithila, and wife of Rama. She was so called because she was supposed to have sprung from a furrow made by king Janaka, while ploughing the ground to prepare it for a sacrifice which he had instituted to obtain progeny, and hence her epithets, 'Ayoniya' 'Dharaputri' etc. also. She was married to Rama and accompanied him to the forest. While there she was once carried off by Ravana, who tried to violate her chastity, but she scornfully rejected

his suit. When Rama came to know that, she was in Lanka, he attacked the place, killed Ravana and his host of demons, and recovered Sita. She, had, however to pass through the terrible ordeal of fire before she could be received by her husband as his wife. Though thus convinced of her chastity, he had afterwards to abandon her, when far advanced in pregnancy, because the people continued to suspect her fidelity. She, however, found a protector in the sage Valmiki, at whose hermitage she was delivered of Kusa and Lava, and who brought them up. She was ultimately restored to Rama by the sage. रघुकुलप्रदीप Raghu is the name of a celebrated king of the solar race, son of Dilipa and father of Aja. He appears to have been called Raghu from रघू or रंघू to go, because his father foresaw that the boy would go to the end of the holy learning as well as of his enemies in battle. True to his name he commenced the conquest of the directions, went over the whole of the then known world, overcame kings in battle and returned covered with glory and laden with spoils. He then performed the विश्वजित् sacrifice in which he gave away everything to Brahmins and made his son Aja successor to the throne. रघुकुल प्रदीप, रघुनन्दन, रघुनाथ, रघुपति etc are the epithets of Rama. दाराणां अभिमर्शनेन निर्विषयीकृतस्य. The word दाराः is masculine and नित्यबहुवचन। It means wife. दाराभिमर्शनं outraging the wife. निर्विषयीकृत driven away from his home, residence, and proper places. परस्परोपकारकृतप्रतिश्रयो: Rama has promised Sugriva that he will help him by killing his brother Vali and making Sugriva as the king, and in return Sugriva also promised Rama that he will help him in recovering Sita, with his वानरसैन्य. हरि a monkey. हरिशब्द has got many meanings such as—Vishnu, Indra, Siva, Yama, the sun, the moon, a man, a ray of light, fire, wind, etc. ऋक्ष a bear (हेममालिनं हेमेव किरणानां माला अस्यस्य तं). समुद्योग active exertion.

P.4. इदानीं etc. विग्रह separated. हरिहर a particular form of deity consisting of Vishnu and Siva conjoined.

स्थापना here this word is specially used for प्रस्तावना । An introductory dialogue (the prologue) at the beginning of a drama between the manager and one of the actors, which after giving an account of the author and his qualifications etc introduces the audience to the incidents of the drama. It is also called आमुख. It is thus defined:—

नटी विदूषको वापि पारिपार्श्वक एव वा ।
सूत्रधारेण सहिताः सलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥

The word स्थापना is used in मत्त विलास प्रहसन, भगवदज्जुकं, कौमुदीमहोत्सव, कल्याणसौगन्धिक, and सीतापतिविजय । कथांशस्य स्थापनात् स्थापना ।

ततः प्रविशति etc. लक्ष्मण son of Dasaratha by his wife Sumitra. He was somuch attached to Rama from his very childhood that he became ready to accompany him during his travels and took no small part in the several events that took place during the 14 years of Rama's exile. In the war of Lanka he killed several powerful demons, but particularly Meghanada the most heroic of the sons of Ravana. He was at first mortally wounded by Meghanada by means of a magical weapon, but was restored to life by Susena by means of medicinal drugs fetched by Maruti or Hanuman. One day, time in the disguise of a hermit came to Rama, and said, that he who should happen to see them converse in private should be immediately abandoned, which was agreed to. Lakshmana on one occasion intruded on their privacy and made the word of his brother true by throwing himself into the river Sarayu. He married Urmiladevi by whom he had two sons Anga-

da and Chandraketu. हनुमान् a powerful monkey-chief. He was the son of Anjana by the god wind or Marut and hence called Maruti also. He is represented as a monkey of extraordinary strength and prowess which he manifested on several critical occasions on behalf of Rama, whom he regarded as the idol of his heart. When Sita was carried off by Ravana, he crossed the sea and brought news about her to his lord. He played a very important part in great war at Lanka.

मत्सायक etc. सायक an arrow. मत्सायकाद् मया प्रेषिताद् बाणात् । निहत killed. विदारित torn विकीर्ण scattered. This compound word is an adjective to शत्रुं । सहसा indeclinable, means forcibly, or suddenly. Rama addresses Sugriva as राजन्, द्रक्ष्यसि त्वया च समरे निहतः स वाली you will see that Vali is killed very soon. भयं त्यज don't fear, because you are near to me and I am ready to help you.

P.5. देव अहं etc. आर्यस्य प्रसादात् by your grace, I doubt, I will become the king of Devas also.

मुक्तो देव etc. मुक्त set free. अद्य now. देव-श्रीधर-वीर these are three vocative cases, used to address Rama. साल name of a tree or a tree in general. हिमगिरेः श्रृंगोपमान्. श्रृंग the summit of a mountain. The Sala trees are so tall as the summit of the Himalaya. पयोनिधि the sea. मज्जन् sinking under water. नागालय Patalaloka.

तव नृप etc. मुखनिस्सृत came from mouth. विगत gone away. विनष्ट destroyed. सनीरनीरद् clouds carrying water.

P.6. आर्य etc. उपस्नेह moistening. उपस्नेहेनसह सोपस्नेहं तस्य भावः सोपस्नेहता, तया, वनान्तरं the interior of the forest. अभितः near to, used as an adverb or preposition with accusative.

सम्प्राप्त etc. हरिवर बाहु सम्प्रगुप्त protected well by the hand of Vali. विसंज्ञं करोमि I shall do him without consciousness. प्रचल-

आसौ महीधरश्च तथा, क्रियाविशेषणम् ।

अपराध etc. अपराधमनुद्दिश्य without feeling the fault.

p. 7. ततः प्रविशति etc. वाली name of a celebrated monkey-chief, who was slain by Rama at the desire of Sugriva, his younger brother. He is represented as a very powerful monkey, and is said to have placed under his arm-pit even Ravana when he went to fight with him. During his absence from Kishkindha to slay the brother of Dundubhi, Sugriva usurped the throne considering him to be dead, but when Vali returned, he had to run away to Rshyamuka. Tara, wife of Sugriva, was seized by Vali, but she was restored to her husband when Rama slew him. The origin of Vali is thus narrated:—

उत्प्लुत्य तस्मात् स ह्रदादुत्थितः पुनः ।
तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः ॥
तदद्भुतं दृष्ट्वा त्याज्जितौ धैर्यमात्मनः ।
ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम् ।
अनासाद्यैव तां नारीं सन्निवृत्तमथाभवत् ।
ततः सा वानरपतिं जज्ञे वानरमीश्वरम् ॥
अमोघरेतसस्तस्य वासवस्य महात्मनः ।
बालेषु पतितं बीजं वाली नाम बभूव ह ॥
भास्करेणापि तस्यां वै कन्दर्पवशवर्तिना ।
बीजं निषिक्तं ग्रीवायां विधानमनुवर्तता ॥
ग्रीवायां पतितं बीजं सुग्रीवः समजायत ।
(रामायण उत्तरकाण्ड सर्ग. ३७.)

तारा the wife of Vali, king of the monkeys and mother of Angada. She in vain tried to dissuade her husband Vali from fighting with Rama and Sugriva, and married Sugriva after Vali had been killed by Rama. Here she enters the stage capturing her husband's clothes simply to prevent him from fighting with Rama and Sugriva.

तारे etc. विमुञ्च set free. अनिन्दितांगि vocative case. Vali addresses his wife by this word. It means 'Oh my beautiful.'

वक्त्रं च नयने च वक्त्रनयनं, 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानां' इति एकवद्भावः। प्रस्रस्तं वक्त्रनयनं यस्याः सा। तस्याः सम्बोधनम्। प्रस्रस्त miscarried. परिप्लुत flooded. प्रसीदतु etc. अमात्यवर्गेण सह सम्मन्त्र्य please consult the ministers about the cause of his fighting and then be ready for a fight.

P.8. शक्तो वा etc. परश्वध (ध) a battle-axe. पुण्डरीक a white lotus-flower. नालं not competant. अभिमुखं towards.

तारे मया etc. प्रसह्य forcibly, violently. उत्फुल्ल full blown.

P.9. एषा etc. मन्दभागा unfortunate.

हन्त etc. यावत् here the word stands in the meaning 'in the meantime' denoting an action intended to be done immediately. ग्रीवा neck.

इन्द्रो वा etc. चक्षुषोः पन्थाः चक्षुष्पथं, मम चक्षुष्पथं मच्चक्षुष्पथम्। originally the पथिन् शब्द is नकारान्त। But here it is found in a compound word so it is अकारान्त।

सन्दष्ट etc. In this verse Rama describes Vali in his fighting mood. सन्दष्ट bitten. चण्ड angry. मुष्टि the clenched hand. गाढं closely pressed together. उद्वृत्त elevated. दंष्ट्र fang. गर्जन् roaring. भीमं terribly. संवर्ताग्निः the fire of destruction. संदग्धुमिच्छुः सन्दिधक्षुः wishing to destroy.

P.10. विकसित etc. शतपत्र a lotus. अंगद an ornament, bracelet etc worn on the upper arm. नद्ध tied. पीन fat. Here the हरिवर is Vali. Wise men will not fight with their elders. Sugriva, being a Vanara by his birth has no commonsense, approaches Vali for a fight. Here the word गुरु stands in the meaning of elder brother.

बलवान् etc. वानरेन्द्र Vali. प्रतिमल्ल Sugriva. अवस्था the present condition of Sugriva. शपथ the promise made by you to help Sugriva

रुधिर etc. रुधिरेण कलिलं गात्रं यस्य सः, त्रस्ते संरब्धे च नेत्रे यस्य सः,

